किमपि । तं[1] वि । तमपि । केण[2] वि । केनापि । अहं[3] वि । इत्यादि । 'पदात्' किम् । अवि णाम । अपि[4] नाम ॥

**इतेः ॥ १ । २ । ६ ॥**

पूर्वं सर्वमनुवर्तते । पदात्परस्येति शब्दस्यादेरचो लुक् स्यात् । योगविभागान्नित्यम् । किं ति । किमिति । जं ति । यदिति । तं ति । तदिति । अत्र 'यत्तत्सम्यक्—' इति बिन्दुः । जुत्तंति । युक्तमिति । 'पदात्' इति किम् । इअ विंझगुहाणिळआए । इति विन्ध्यगुहानिलयायाः । अत्र 'त्वेदितः' इत्यतः 'इतः' इत्यधिकृत्य[5] 'मूषिकविभीतक—' इत्यादेः 'अत्' इति च

**इतौ तो वाक्यादौ ॥ १ । २ । ४५ ॥**

वाक्यादिभूते इतिशब्दे तकारसंबन्धिन इकारस्य अत्वं भवति । इतीकारस्यात्वम् । 'वाक्यादिभूते' इति किम् । पिएत्ति । प्रिये इति ।

**तोचः ॥ १ । २ । ७ ॥**

'इतेः' इत्यनुवर्तते । अचः परस्येतिशब्दस्यादेरचः तकारो भवति । झत्ति । झडिति । नूनं । एवं । किं । सं । अत्र मांसादित्वाद्विकल्पेन बिन्दुलोपे । णूणं । णूण । एवं । एव । किं । कि । सं । स ।

यावत् । तावत् । एवमेव । अत्र 'एवमेव देवकुल—' इत्यादिना सूत्रेण अन्तर्वर्तमानस्य वकारस्याचा सह लोपे । जा । जाव । ता । ताव । एमे अ । एवमेव । कुत्र । कुतः । 'त्रतसि च किमो क्कः' इति किमः कादेशे 'हित्थहास्त्रलः' इति त्रलः । त्रिष्वादेशेषु । किहि । कत्थ । कह । तस् । कादेशे कत इति स्थिते

**अतो डो विसर्गः ॥ २ । २ । १२ ॥**

अकारात् परो विसर्गो डिदोकारो भवति । कओ । अत्रैव 'दो त्तो तसः' इति तसो दो त्तो । कदो । कत्तो । सिद्धावस्थापेक्षया ।

---

१ तमपि । तं वि M. २ केनापि । केण वि M. ३ हं वि M. ४ अपि नाम is omtted in P., My. ५ इत्यधिकृत्य M., T.

कुओ । कुदो । एवमग्रतः । अग्गओ । पुरतः । पुरओ । सर्वतः । सव्वओ । इत्यादि । नपुनश्शब्दे

**शिश्लुङ् नपुनरि तु ॥ १ । १ । २८ ॥**

'अन्त्यहलोश्रदुदि' इत्यतः[1] 'अन्त्यहलः' इत्यनुवर्तते । नपुनश्शब्दे अन्त्यव्यञ्जनस्य शानुबन्ध इकारो लुक् च वा[2] भवति । शित्वात् पूर्वस्य दीर्घः । णउणाइ । णउणा । पक्षे । णउण । णउणो । पुनश्शब्दे पुणाइ इति च दृश्यते । णउणेत्यत्र पदादित्वात् परस्य लोपाभावेपि बहुलाधिकारात् क्वचिदादेरपि भवतीति पकारस्य लोपो भवति । तेन णउणा । न पुनः ।

प्रसङ्गाद्यद्यहमित्यादौ किंचिदुच्यते । यदि इमाः । वयमन्यत्र इत्यादौ 'आदेः' इत्यधिकृत्य

**लुगव्ययत्यदाद्यात्तदचः ॥ १ । २ । ३ ॥**

अव्ययात् त्यदादेश्च परस्य तदचस्तयोरेवाव्ययत्यदाद्योरादेरचो बहुलं लुक् स्यात् । अव्ययात् तावत् । जइ अहं । जइ हं । यद्यहम् । जइ इमा । जइमा । यदीमाः । त्यदादेः परस्य । अम्ह अण्णद्ध । अम्हण्णद्ध । वयमन्यत्र । 'आदेः' इति किम् । जइ इमा इत्यादावनादेर्माभूत् । एवं सर्वत्राव्ययसंबन्धिनस्त्यदादेरचो लोपो द्रष्टव्यः ॥

इत्यव्ययानि ॥

---

१ इत्यनुवर्तते T., M. २ M. drops वा.

## अथ तद्धितादेशाः ।

**मन्तमणवन्तमाआलुआलइरइल्लउल्लइन्ता मतुपः ॥ २ ।१।१॥**

मतुप्प्रत्ययस्य मन्तादय[1] आदेशा यथाप्रयोगं[2] भवन्ति । मन्त । श्रीमान् । सिरिमन्तो । पुण्यवान्[3] । पुण्णमन्तो । मण । धनवान्[4] । धनमणो । वन्त । भक्तिमान् । भक्तिवन्तो । मा । हनुमान् । हणुमा । पटवान् । पडमा । आलु । गेहालू । दयालू । लज्जालू । आल । सद्दालो । जडालो । रसालो । जोह्नालो । इर । गव्विरो । गर्ववान् । अत्रानुक्तन्यायेन यस्येति चेत्यकारलोपः । इल्ल । छाइल्लो । भाइल्लो । उल्ल । दप्पुल्लो[5] । दर्पवान् । अत्र डित्करणाभावेपि बहुलग्रहणादकारलोपः । इंत । मानवान्[6] । माणइन्तो । 'मतुपः' इति किम् । धणी[7] । अत्थी ॥

**वतुपो डित्तिअमिदमेतल्लुक् चैतद्यत्तदः ॥ २ । १ । २ ॥**

एतद् यद् तद् एतेभ्यः परस्य परिमाणार्थस्य वतुप् प्रत्ययस्य डित् इत्तिअम् इत्यादेशः स्यात्[8] इदमेतदोः लुक् च । एतावत् । इत्तिअं । यावत्[9] । जित्तिअं । तावत्[10] । तित्तिअं ।

**किमिदमश्च डेत्तिअडित्तिलडेद्दहं ॥ २ । १ । ३ ॥**

किमिदंभ्यां परस्य चकारादेतद्यत्तदः परस्य वतुप्प्रत्ययस्य डानुबन्धः एत्तिअ इत्तिल एद्दह इत्यादेशा भवन्ति[11] इदमेतल्लुक् च । डानुबन्धादन्त्यस्वरादेर्लुक् । एतावत् । एत्तिअं । इत्तिलं । एद्दहं । कियत् । केत्तिअं । कित्तिलं । केद्दहं । इयत् । एत्तिअं । इत्तिलं । एद्दहं । यावत् । जेत्तिअं । जित्तिलं । जेद्दहं । तावत् । तेत्तिअं । तित्तिलं । तेद्दहं ॥

---

१ मन्तादयो for मन्तादय आदेशा T. २ यथाक्रमं प्रयोगे M. ३ My. and P. omit पुण्यवान्. ४ धनमणो । धनवान् M. ५ दर्पवान् । दप्पुल्लो M. ६ मानवान् is omitted in P., My. ७ धणी M. ८ भवति M. ९ यावत् is omitted in My., P, १० My. and P. omit तावत्. ११ स्युः My., P.

**इकः पथो णस्य ॥ २ । १ । ४ ॥**

'पंथो ण नित्यम्' इति पथो यो णप्रत्ययो विहितस्तस्य इक इत्यादेशो भवति । पांथः । पहिओ । यद्यपि पथिकशब्दादपि सिद्धावस्थापेक्षयेदं रूपं भवति तथापि पान्थशब्दस्य रूपान्तरनिवृत्त्यर्थमिदमुदाहृतम् ॥

**खस्य सर्वाङ्गात् ॥ २ । १ । ५ ॥**

इक इत्यनुवर्तते । सर्वाङ्गाद् व्यापिन्यर्थे विहितस्य खप्रत्ययस्य इक ईत्यादेशो भवति । सर्वाङ्गीणः । सव्वंगिओ ॥

**छस्यात्मनो णअः ॥ २ । १ । ६ ॥**

आत्मनः परस्य छप्रत्ययस्य णअ इत्यादेशो भवति । आत्मीयम् । अप्पणअं । अत्र 'वात्म भस्मनि पः' इति पः ।

**हित्थ हास्त्रलः ॥ २ । १ । ७ ॥**

सप्तम्यन्तान्नाम्नो विहितस्य त्रल्प्रत्ययस्य हि त्थ ह इति त्रय आदेशा भवन्ति । यत्र । जहि । जद्ध । जह । कुत्र । कहि । कद्ध । कह । अत्र 'त्रतसि च किमो स्कः' इति किमः कादेशः । अन्यत्र । अण्णहि । अण्णद्ध । अण्णह । इत्यादि ॥

**केर इदमर्थे ॥ २ । १ । ८ ॥**

इदमर्थे विहितस्य प्रत्ययस्य केर इत्यादेशो भवति । युष्मदीयः । तुम्हकेरो । अत्र 'अर्थपरे तो युष्मदि' इति यस्य तकारः । 'श्मष्म—' इत्यादिना ष्मस्य म्हः । अस्मदीयः । अम्हकेरो । अत्रैव दैवादिपाठाद् द्वित्वे अम्हक्केरो । अत्रापि पूर्ववत् म्हादेशः । बहुलाधिकारात् क्वचिन्न भवति । मदीयपक्षः । मईअपक्खो । मदीयमार्गः । मइज्जमग्गो । पाणिनीयं । पाणिणीअं ।

---

१ भवेत् T. २ इत्यादेशः स्यात् My., P. ३ °न्तात् सर्वनाम्नो T. ४ आदेशाः स्युः P, My. ५ इत्यादेशः स्यात् P., My. ६ मइज्जपक्खो M. ७ My. and P. omit मदीयमार्गः । मइज्जमग्गो । ८ पाणिणिज्जं M.

**राजपराड्डिक्कडक्को च ॥ २ । १ । ९ ॥**

राजन् पर इत्येताभ्यां परस्य इदमर्थप्रत्ययस्य डित् इक्क अक्क इति भवतः चकारात् केरश्च । राजकीयम् । राइक्कं । अत्र जलोपटिलोपौ । राअक्कं । राअकेरं । परकीयं । पारिक्कं । पारक्कं । पारकेरं । अत्र समृद्ध्यादिपाठादादेरवर्णस्य वा दीर्घः[1] । परिक्कं । परक्कं । परकेरं ॥

**डेच्चओ युष्मदस्मदोणः ॥ २ । १ । १० ॥**

युष्मदस्मद्भ्यां परस्य इदमर्थस्य अणः डित् एच्च अ इत्यादेशो[2] भवति । यौष्माकम् । तुम्हेच्चअं । आस्माकम् । अम्हेच्चअं ।

**वं वतेः ॥ २ । १ । ११ ॥**

उपमानार्थस्य वतिप्रत्ययस्य वं इत्यादेशो[3] भवति । रित्वाद्वित्वम् । मुहुरव्व पाडलीवुत्ते पासाओ । मधुरावत् पाटलीपुत्रे प्रासादः ॥

**त्वस्य[4] तु डिमात्तणौ ॥ २ । १ । १३ ॥**

भावार्थस्य त्वप्रत्ययस्य डित् इमा त्तण इत्यादेशौ तु भवतः । पीनत्वम् । पीणिमा । पीणत्तणं । पूर्वत्वम्[5] । पुव्विमा । पुव्वत्तणं । पक्षे पीणत्तं । पुव्वत्तं । 'त्वस्य' इति किम् । पीणआ । पीणदा । पीनता ॥

**दो त्तो तसः ॥ २ । १ । १४ ॥**

पञ्चम्यन्तान्नाम्नः परस्य तसः दो त्तो इति वा भवतः । सव्वदो । सव्वत्तो । अण्णदो । अण्णत्तो । पक्षे । सव्वओ । इत्यादि ॥ अत्र

**अतो डो विसर्गः ॥ २ । २ । १२ ॥**

---

१ दीर्घे T. २ इत्यादेशः स्यात् T. ३ इत्यादेश. स्यात् T. ४ T. has before it the following.—तैलस्यानंकोलाड्डेल. । अकोलवर्जिताड्डात्परस्य तैलस्य एल्ल इत्यादेशो भवति । सुरहेल्ल । सुरभितैलम् । कडेल्ल । कटुतैलम् । 'अनंकोलात्' इति किम् । अंकोलतेल्ल । ५ M. and T. have पुष्पत्वम् before it.

अकारात् परो विसर्गो डिदोकारः स्यात् । इति विसर्गस्यौकारः । एवमग्रतः पुरतः कुत इत्यादि ॥

**एकाद्स्सिसिअइआ ॥ २ । १ । १५ ॥**

एकशब्दात् परस्य दाप्रत्ययस्य सि सिअ इआ इत्यादेशा भवन्ति । एकदा । एक्कसि । एक्कसिअ । एक्कइआ । पक्षे । एक्कआ । अत्र दैवादिपाठाद् द्वित्वम् । पक्षे । एगसिअ । इत्याद्यपि ॥

**ल्हुत्तं कृत्वसुचः ॥ २ । १ । १६ ॥**

कृत्वसुच्प्रत्ययस्य हुत्तमित्यादेशो लित् स्यात् । सअहुत्तो[1] । शतकृत्वः । सहासहुत्तो । सहस्रकृत्वः । इत्यादि । अत्र 'शोर्लुस—' इति दीर्घः ॥

**भवेडिल्लोल्लडौ ॥ २ । १ । १७ ॥**

भवार्थे नाम्नः परौ इल्ल उल्ल इत्येतौ डितौ भवतः । पुरो भवम् । पुरिल्लं । अधो भवम् । हेट्ठिल्लं । अत्र 'उभयाधसोरवहहेट्ठौ' इत्यधसो हेट्ठादेशः । उल्ल । आत्मभवम् । अप्पुल्लं ॥

**स्वार्थे तु कश्च ॥ २ । १ । १८ ॥**

स्वार्थे नाम्नः परः कप्रत्ययो[2] वा भवति । चकाराड्डिल्लोल्लौ च । चन्द्रः । चन्द्रो । चन्दओ । इह । इहअ । ककारोच्चारणं पैशाची-भाषार्थम् । तेन तत्र वदनं वतनकं । डिल्ल । पुरिल्लो । पुरा । पुरो वा । उल्ल । पिउल्लो । प्रियः । मुहुल्लं । मुखम् । हत्थुल्लो । हत्थो । हस्तः । पक्षे । चन्दो । इत्यादि । कुत्सादिविशिष्टेषु संस्कृतवदेव कः सिद्धः ॥

**उपरेः संव्याने ल्लल् ॥ २ । १ । १९ ॥**

उपरिशब्दात् संव्यानेर्थे द्विरुक्तो लो भवति । लित्वान्नित्यम् । उपरिल्लो । 'सव्याने' इति किम् । उपरिं[3] । अत्र वक्रादित्वाद्बिन्दुः ॥

---

१ शतकृत्वः । सअहुत्तो M. २ कप्रत्ययस्तु भवति M. ३ उवरिं M.

**मिश्राल्लिअः ॥ २ । १ । २१ ॥**

मिश्रशब्दात् स्वार्थे शिद्वा लिअ इत्यादेशः स्यात् । शित्वात्पूर्वस्य दीर्घः । मीसालिअं । पक्षे । मीसं । अत्र 'शोल्लुप्त—' इति दीर्घः ॥

**शनैसो ल्डिअं ॥ २ । १ । २२ ॥**

असाल्लिङ्डिच्च इअं स्यात् । सणिअं ॥

**मनाको डअं च वा ॥ २ । १ । २३ ॥**

असात् डित् अअं चकारादिअं च वा स्यात् । मणअं । मणिअं ॥

**रो दीर्घात् ॥ २ । १ । २४ ॥**

असात् स्वार्थे रो वा स्यात् । दीहरं । दीहं । दिग्घम् ॥

**लो वा विद्युत्पत्रपीतान्धात् ॥ २ । १ । २६ ॥**

एभ्यः स्वार्थे लो वा स्यात् । विज्जुला । विज्जू । पत्तलं । पत्तं । पीवलं[3] । पीअं । अन्धलो[4] । अन्धो ॥

**इरः शीलाद्यर्थस्य ॥ २ । १ । २८ ॥**

शीलधर्म्यसाध्वर्थे[5] विहितस्य प्रत्ययस्य स्थाने इर इत्यादेशो[6] भवति । हँसनशीलः । हँसिरो । रोदनशीलः । रोइरो । लज्जाशीलः । लज्जिरो । जपशीलः । जपिरो । इत्यादि ॥

---

इति तद्धितादेशाः ॥

**अथ शास्त्रोक्ताः कतिचिद्विभक्त्यर्थाः प्रदर्श्यन्ते ॥**

**ङसो ङम् ॥ २ । ३ । ३५ ॥**

---

१ T. adds before this —नवैकाद्वा । नव एक इत्येताभ्यां परस्य स्वार्थे द्विरुक्तो लो वा भवति । णवल्लो एक्को । अत्र दैवादित्वाद्द्वित्वम् । २ T. adds पक्षे मणा after it, P. has इत्युत्तरं पक्षे मणा after it. ३ पीअ । पीवलं M. ४ अन्धो । अन्धलो M. ५ °साधुकार्यार्थे T., M. ६ इत्यादेशः स्यात् T. ७ सहनशीलः T. ८ सहिरो T.

[1]ङेसिति चतुर्थी [2]ङमिति षष्ठी । चतुर्थीस्थाने षष्ठी स्यात् । मुणिस्स मुणिणो भोअणं देहि । णमो देवस्स दे[3]वाण ॥

**तादर्थ्ये ङेस्तु ॥ २ । ३ । ३६ ॥**

तादर्थ्यचतुर्थ्ये[4]कवचनस्थाने षष्ठी वा[5] स्यात् । देवस्स । देवाय । देवार्थमित्यर्थः । 'ङेः' इति किम् । देवाणं ॥

**व[6]धाड्डाइ च ॥ २ । ३ । ३७ ॥**

व[7]धात् परस्य ङे स्थाने आइ इति डिद्वा स्यात् । [8]चातु षष्ठी । वहाइ । वहस्स । वहाय । व[9]धार्थम् ॥

**क्वचिदसादेः ॥ २ । ३ । ३८ ॥**

ङमनुवर्तते । द्वितीयादिविभक्तीनां स्थाने क्वचित् षष्ठी स्यात् । माहवस्स वन्दे । माधवं वन्दे । धणस्स लद्धो । धनेन लब्धः । चोरस्स भिहइ । चोराद्बिभेति । अन्तेउरस्स रमिउं आअओ । अन्तःपुरे रन्तुमागतः ॥

**अस्टासोर्ङीप् ॥ २ । ३ । ३९ ॥**

अस् द्वितीया टास् तृतीया तयोः स्थानेङीप् सप्तमी क्वचिद्भवति तु । गामे वहामि । ग्रामं वहामि । णअरे णजामि । नगरं नयामि । अत्र द्वितीयायाः । तेसुं अलंकआ पुहवी । तैरलंकृता पृथिवी । अत्र तृतीयायाः ॥

**ङसिसष्टास् च ॥ १ । ३ । ४० ॥**

ङसिसः पञ्चम्याः टास् तृतीया चकारात् सप्तमी भवति । चोरेण भिहइ । चोराद्बिभेति । अंदेपुरे रमिअ आअओ । अन्तःपुराद्रन्त्वा आगतः ॥

**ङिपोस् ॥ २ । ३ । ४१ ॥**

---

१ ङेस् चतुर्थी P, My. २ ङं षष्ठी My., P. ३ देवाणं M. ४ °क-वचनस्य M. ५ M. drops वा. ६ पदात् M. ७ पदात् M. ८ चात् M.; चकारात् T. ९ पदार्थम् M.

ङिपः सप्तम्याः स्थाने अम् द्वितीया क्वचित् स्यात्[1] । विज्जुज्जोअं भरइ रइं । विद्युद् द्योते स्मरति रतिम् ॥

प्रसङ्गादेकैकमित्यादि वीप्सास्थाने किंचिदुच्यते ।

**वीप्सार्थात्तदचि सुपो मस्तु ॥ २ । २ । १ ॥**

वीप्सार्थात् पदात् परस्य सुपःस्थाने तदचि तस्य वीप्सार्थस्य संबन्धिन्यचि परे मो वा स्यात् । एकैकं । एक्कमेक्कं । एक्कमेक्केण । अंगे अंगे । अंगमंगम्मि । पक्षे । एक्केक्कं । इत्यादि । एवं वीप्सास्थले सर्वत्र रूपाण्युदाहर्तव्यानि ॥

इति विभक्त्यर्थाः ॥

---

## अथ निपाताः प्रदर्श्यन्ते[2] ।

**वरइत्तगास्तृनाद्यैः ॥ २ । १ । ३० ॥**

वर इत्त इत्यादयस्तृनादिप्रत्ययसहिताः स्वराद्यादेशविशेषिता बहुलं निपात्यन्ते ॥

**वरइत्तो नूतनवरे ॥ १ ॥** अस्मिन्[3] वरइत्तो इति निपात्यते । वरइत्तो । **कणइल्लवाअडौ शुके ॥ २ ॥** कणइल्ल[4] वाअड इत्येतौ शुके निपात्येते । कणइल्लो । वाअडो । **मइलपुत्ती पुष्पवत्याम् ॥ ३ ॥** पुष्पवत्यां मइलपुत्ती इति प्रयोज्यम् । मइलपुत्ती । **द्विपे दुग्घोट्टदोग्घोट्टदूणाः ॥ ४ ॥** त्रय एते द्विपे निपात्यन्ते । दुग्घोट्टो । दोग्घोट्टो । दूणो । **धाराविरेचनशीले विरिंचिरो ॥ ५ ॥** अस्मिन्नयं निपात्यते । विरिंचरो । **सूरल्ली मध्याह्ने ॥ ६ ॥** मध्याह्नेयं प्रयोज्यः[5] । सूरल्ली । **कोमलविलासिनोर्वेल्लपाल्लौ ॥ ७ ॥** अनयोरयं निपात्यते । **नूपुरे सद्दालं ॥ ८ ॥** नूपुरेयं निपात्यते । सद्दालं । **भ्रमरे**

---

१ भवति T. २ T. has श्रीशिवाय नमः after this. ३ P. and My. drop from अस्मिन् to वरइत्तो. ४ P. and My. drop from कणइल्ल to वाअडो. ५ My. and P. drop it.

**अल्लिल्ल पुलंधअ रसाआः** ॥ ९ ॥ एते त्रयो भ्रमरे निपात्यन्ते । अल्लिलो । पुलंधओ । रसाओ । **लअणी कणई लइणा लतायाम्** ॥ १० ॥ त्रय एते लतायां निपात्यन्ते । लअणी । कणई । लइणा । **कनीयस्यां बहुज्ञा** ॥ ११ ॥ अस्यामयं निपात्यते । [1]बहुज्ज्ञा । **भ्रातृजायायां भाउज्ञा** ॥ १२ ॥ अस्यां भाउज्ञा इति निपात्यते । [2]भाउज्ञा । **मातुलात्मजास्याल्योर्मेहुणिआ** ॥ १३ ॥ अनयोरयं निपात्यते । मेहुणिआ । **रोदनशीले रिमिणो** ॥ १४ ॥ अस्मिन् रिमिण इति निपात्यते । रिमि[3]णो । **अडअणाछिच्छईपुण्णाळयः पुंश्चल्याम्** ॥ १५ ॥ [4]त्रयोऽस्यां निपात्यन्ते । अडअणा । छिच्छई । पुण्णाळी । **बहुमिथ्या[5]वादिनि चप्पळओ** ॥ १६ ॥ अस्मिन्नयं निपात्यते । चप्पळओ । **पिव्वं जले** ॥ १७ ॥ [6]जले अयं निपात्यते । पिव्वं । **मघोणो मघवति** ॥ १८ ॥ [7]मघवत्ययं निपात्यते । मघोणो । **सइलासिओ मयूरे** ॥ १९ ॥ अस्मिन्नयं निपात्यते । सईलासिओ । [8]**प्रलपिते वाउल्लो** ॥ २० ॥ [9]प्रलपिते वाउल्लो इति निपात्यते । वाउल्लो । **मूर्खेपलहिअओ** ॥ २१ ॥ [10,11]अस्मिन्नयं निपात्यते । पलहिअओ । उपलहृदय इत्यर्थः । **चण्डि[12]क्कः कोपे** ॥ २२ ॥ कोपेयं निपात्यते । चण्डि[13]क्को । [14]**चण्डिज्ञः पिशुनकोपयोः** ॥ २३ ॥ अनयोरयं निपात्यते । चण्डिज्जो । **म्लाने कुम्मणो** ॥ २४ ॥ अस्मिन्नयं निपात्यते । कु[15]म्मणो । **द्रेष्ये अच्छिहरुल्लो** ॥ २५ ॥ अस्मिन्नयं

---

१ M. drops this Sûtra; M. has it with this remark ग्रन्थान्तरेऽयं दृश्यते. २ My. and P. drop it. ३ My. and P. omit it. ४ अस्या त्रयो M. ५ °वाचिनि M. ६ My. and P. drop the line. ७ My and P. drop this line. ८ My. and P. omit it. ९ My. and P. omit it. १० My. and P. drop the line. ११ My. and P. drop from अस्मिन् to पलहिअओ. १२ चण्डिक्को M. १३ My. and P. omit it. १४ चण्डिज्जो M. १५ My. and P drop it.

निपात्यते[1] । अच्छिहरुल्लो[2] । रूपवति च्छाइल्लो[3] ॥ २६ ॥ रूपवत्ययं[4] प्रयोज्यः । छाइल्लो[5] । कान्तिमान्[6] । लतागृहे कुडुङ्गकुडङ्गकुडुक्काः ॥ २७ ॥ अस्मिन्नेते निपात्यन्ते । कुडुङ्गो । कुडङ्गो । कुडुक्को । वृद्धे जरण्डो ॥ २८ ॥ वृद्धे अयं निपात्यते[7] । जरण्डो[8] । अच्छिविअच्छी[9] परस्पराकृष्टौ ॥ २९ ॥ अस्यां अच्छिविअच्छी[10] इति निपात्यते[11] । अच्छि[12] । विअच्छी । धूमरी तुहिने ॥ ३० ॥ तुहिने अयं निपात्यते । धूमरी[13] । सोत्ती तरङ्गिण्याम् ॥ ३१ ॥ अस्यामयं निपात्यते । सोत्ती[14] । ग्रहभीते अहिसिओ ॥ ३२ ॥ अस्मिन्नयं प्रयोज्यः । अहिसिओ[15] । गवि गावी ॥ ३३ ॥ गवि गावीति निपात्यते । गावी[16] । उद्धलपद्धलौ पार्श्वद्वयाप्रवृत्तौ ॥ ३४ ॥ अस्यामुद्धल[17] पद्धल इत्येतौ निपात्येते । अङ्गस्पर्शनिमित्तयोर्हासपुलकयोर्गज्जलिओ ॥ ३५ ॥ अङ्गस्पर्शनिमित्ते हासे पुलके चायं निपात्यते । गज्जलिओ । चित्तलं रम्ये ॥ ३६ ॥ रम्ये अयं निपात्यते । चित्तलं[18] । पाडहुकः प्रतिभुवि ॥ ३७ ॥ प्रतिभुव्ययं[19] निपात्यते[20] । पाडहुकः[21] । पासणिअपासाणिऔ साक्षिणि ॥ ३८ ॥ अस्मिन्नेतौ[22] निपात्येते । पासणिओ । पासाणिओ । अवरिज्जलाहिल्लावद्वैतलम्पटयोः ॥ ३९ ॥ अनयोरेतौ[23] क्रमान्निपात्येते । अवरिज्जं । लाहिल्लो । कडिल्लमाशीर्गहनदौवारिककटिवस्त्रनिर्विवरविपक्षेषु ॥ ४० ॥

---

१ प्रयोज्य. My., P. २ Omitted in P., My. ३ चाइल्लो M. ४ My. and P. drop रूप—प्रयोज्य. ५ चाइल्लो M. ६ M. drops it. ७ प्रयोज्यः T. ८ My. and P. omit it. ९ अच्चिविअच्ची M. १० अच्चिविअच्ची M. ११ निपात्येते M. १२ अच्चि । विअच्ची M. १३ My. and P. drop it १४ Omitted in P., My. १५ My. and P. omit it. १६ Omitted in P., My. १७ My. and P. drop the line. १८ My. and P. omit it. १९ My. and P. omit the line. २० निपात्यः T. २१ पाडहुओ M. २२ My. and P. omit the line. २३ My. and P. drop from अनयो—to निपात्येते.

आशीःप्रभृतिषु षट्सु कडिल्लमिति निपात्यते । [1]कडिल्लं । रूवसिणी कुडुंबीअं रूपवतीसुरतयोः ॥ ४१ ॥ रूपवत्यां सुरते च [2]क्रमादेतौ स्तः । रूवसिणी । कुडुंबीअं । अन्तरिज्जं रशनाकटिसूत्रयोः ॥ ४२ ॥ अनयोरयं निपात्यः । अन्तरिज्जं । अवड्डुल्लिअं कूपादिनिपतिते ॥ ४३ ॥ अस्मिन् अवड्डुल्लिअं इति निपात्यते । [3]अवड्डुल्लिअं । [4]अवड्डुक्किअं इति केचित् । पिप्पडिअबुड्डिरौ यत्किंचित्पठितमहिषयोः ॥ ४४ ॥ यथाक्रमं निपात्येते । पिप्पडिअं । बुड्डिरो । सरिसाहुलगुमिलौ सदृशमूढयोः ॥ ४५ ॥ अनयोरेतौ क्रमान्निपात्येते । सरिसाहुलो । गुमिलो । कच्चं कार्ये ॥ ४६ ॥ [5]अस्मिन्नयं स्यात् । कच्चं । घडिआघडाघड्यौ गोष्ठ्याम् ॥ ४७ ॥ गोष्ठ्यामेतौ निपा[6]त्यौ । घडिआ । घडाघडी ॥ निश्रे[7]ण्यां कमणी ॥ ४८ ॥ किरिकिरिआ कर्णोपकर्णिकाकुतुकयोः ॥ ४९ ॥ अनयोरयं प्रयोज्यः । किरिकिरिआ । अण्णइकः सर्वार्थतृप्ते ॥ ५० ॥ सर्वा[8]र्थे यस्तृप्तस्तस्मिन्नयं निपात्यः । अण्णइओ । साहुली शाखायाम् ॥ ५१ ॥ शाखायामयं निपात्यः । साहु[9]ली । दृष्टार्थयाचनशीले जंपेक्खिमग्गिरओ ॥ ५२ ॥ अस्मिन्नयं निपात्यते । जंपेक्खिमग्गिरओ । गअ[10]साउल्लसिहं[11]डहिल्लौ विरक्तबालकयोः ॥ ५३ ॥ अनयोरेतौ क्रमाद् भवतः । गअ[12]साउल्लो । [13]सिहंडहिल्लो । धूर्तवृषभे अलवलवसहो ॥ ५४ ॥ अस्मिन्नयं प्रयोज्यः । [14]अलवलवसहो । प्रणयकोपे खुरहखुडी ॥ ५५ ॥ अस्मिन्नयं निपा[15]त्यः । खुरहखुडी । हिमकालदुर्दिने सीउल्लं सीउट्टं च ॥ ५६ ॥ अस्मिन्नेतौ निपा[16]त्येते ।

---

१ My. and P. omit it. २ यथाक्रम° T. ३ My. and P. omit it. ४ M. omits अव—केचित्. ५ My. and P. omit the line. ६ निपात्येते T. ७ M. omits it. ८ My. and P. omit सर्वार्थे—निपात्यः. ९ My. and P. omit it. १० 'साहुळ M. ११ °डइळौ M. १२ °साहुळो M. १३ °डइळो M. १४ My. and P. drop it. १५ निपात्यते My., P. १६ प्रयोज्यौ P., My.

सीउह्लं । सीउट्टं । **तित्तिवरण्डौ तात्पर्यप्राकारयोः** ॥ ५७ ॥ अन-
योरेतौ क्रमात् स्तः । तित्ति । वरंडो । वरण्डः संस्कृतेपीति केचित् ।
**त्रपायां हीरं[1]णा** ॥ ५८ ॥ अस्यामयं स्यात् । हीरं[2]णा । **ग्रामभक्षके
गामेरेडो** ॥ ५९ ॥ [3]योन्तः स्थित्वा ग्रामं भुङ्क्ते तस्मिन् गा[4]मेरेडो
इति निपात्यते । गा[5]मेरेडो । **लडहावेल्लर्यौ विलासवत्याम्** ॥ ६० ॥
अस्यामेतौ स्तः । लडहा । वेल्लरी । **डुम्मइणीलज्जालुइण्यौ कलह-
कारिणीत्रपावत्योः** ॥ ६१ ॥ अनयोरेतौ क्रमात् स्तः । दुम्मइणी ।
लज्जालुइणी । **तण्णाअचिक्खअणावार्द्रासहनयोः** ॥ ६२ ॥
आर्द्रे असहने चै[6]तौ क्रमात् स्तः । तण्णाअं । चिक्खअणो । **वेणिअ–
सुण्हसिऔ वचनीयनिद्राशीलयोः** ॥ ६३ ॥ अनयोरेतौ क्रमात्
स्तः । वेणिअं । सुण्हसिओ । **वप्पिअ[7]बन्धोल्लौ केदारमे[8]ळकयोः**
॥ ६४ ॥ अनयोः क्रमादेतौ स्तः । वप्पिओ । ब[9]न्धोल्लो । **वा[10]रिज्जो
विवाहे** ॥ ६५ ॥ [11]अस्मिन्नयं स्यात् । वा[12]रिज्जो । **हडहडसाउल्ला-
वनुरागे** ॥ ६६ ॥ अस्मिन्नेतौ स्याताम् । हडहडो । साउल्लो । **माणं-
सी मायाविमनस्विनोः** ॥ ६७ ॥ अनयोरयं[13] निपात्यः । मा[14]णंसी ।
**कोडिअकोडिल्लौ पिशुने** ॥ ६८ ॥ अस्मिन्नेतौ निपा[15]त्येते । कोडि-
ओ । कोडिल्लो । **अट्टणगंजोलौ वा[16]र्तज्ञसमाकुलयोः** ॥ ६९ ॥
अनयोरेतौ स्याताम् । अट्टणो । गंजोलो । **वन्दिनि वंडिणो** ॥७०॥
[17]अस्मिन्नयं निपात्यः । वंडिणो । **तत्तिलतच्छिलौ तत्परे** ॥ ७१ ॥
[18]अस्मिन्नेतौ निपात्येते । तत्तिलो । तच्छिलो । **ऊसुंभिअं रुद्धगलरोदने**

---

१ हिरणा M. २ My. and P. omit the line. ३ M. has अस्यामयं स्यात् for योन्तः स्थित्वा—निपात्यते. ४ गावरेडो M. ५ गावरेडो M. ६ च क्रमादेतौ My., T. ७ बन्दोल्लौ M. ८ °मेळकबन्धयोः M. ९ वन्दोल्लो M. १० वारिज्जुर्वि° M. ११ My. and P. drop the line. १२ वारिज्जु M. १३ स्यात् M. १४ My. and P. omit it. १५ प्रयोज्यौ T. १६ आत्मज्ञ° M. १७ My. and P. drop the line. १८ My. and P. drop अस्मिन्नेतौ निपात्येते.

॥ ७२ ॥ असिन्नयं स्यात् । ऊसुंभिअं । **णिउक्कबम्हालठाणिज्जउवउज्जास्तूष्णीकापस्मारगौरवोपकारिषु** ॥ ७३ ॥ क्रमादेतेष्वेते स्युः । णिउक्को । बम्हालो । ठाणिज्जं । उववउज्जो । **एक्कल्लमहल्लौ प्रबलमुखरयोः** ॥ ७४ ॥ [1]अनयोरेतौ [2]स्याताम् । एक्कल्लो । महल्लो । **माउसिआ माउच्चा च मातृष्वसरि** ॥ ७५ ॥ अस्यामेतौ स्याताम् । माउसिआ । माउच्चा ॥ **कुच्छिमई गर्भवत्याम्** ॥ ७६ ॥ [3]अस्यामयं स्यात् । कुच्छिमई । [4]**रिंछोळीघोरण्यौ पङ्क्तौ** ॥ ७७ ॥ [8]अस्यामेतौ स्याताम् । [6]रिंछोळी । घोरंणी[7] । **पटकुट्यां पडमा** ॥ ७८ ॥ **यूनि जुअणो** ॥ ७९ ॥ **करमरी हठहृतायाम्** ॥ ८० ॥ **दववर्त्मनि दड्ढाळी** ॥ ८१ ॥ **कृत्रिमे कारिमम्** ॥ ८२ ॥ **जंघालुअजंघामऔ द्रुते** ॥ ८३ ॥ एतौ द्रुते स्याताम् । जंघालुओ । जंघामओ । **बलामोडी बलात्कारे** ॥ ८४ ॥ असिन्नयं स्यात् । बलामोडी । **चक्कलं वर्तुले** ॥ ८५ ॥ [9]असिन्निदं स्यात् । चक्कलं ॥ **बहुल्ली क्रीडोचितसालभञ्जिकायाम्** ॥ ८६ ॥ अस्यामयं स्यात् । [10]बहुल्ली । **मत्ते मत्तवालो** ॥ ८७ ॥ [11]मत्तवालो । **बहुल्लिआ ज्येष्ठभ्रातृवध्वाम्** ॥ ८८ ॥ [12]अस्यामयं स्यात् । बहुल्लिआ । **जंभणंभणः स्वैरभाषिणि**[13] ॥ ८९ ॥ असिन्नयं स्यात् । जंभणंभणो । **भाइरभेज्जलभेज्जओज्जरा भीरौ** ॥ ९० ॥ चत्वार एते निपात्यन्ते । भाइरो । भेज्जलो । भेज्जो । ओज्जरो । **आहडं सीत्कारे** ॥ ९१ ॥ सीत्कारे[14] आहडं स्यात् । आहडं । **काअपिउला[15] कोकिलायाम्**[16] ॥ ९२ ॥ [17]अस्यामयं निपा-

---

१ My. and P. drop अनयो—स्याताम्. २ क्रमात् स्याताम् T. ३ My and P. omit the line. ४ रिंभोळिदो° M. ५ My. and P. drop the line. ६ रिंभोळि M. ७ दोरणी M. ८ असिन्नेतौ स्याताम् M. ९ P. and My. drop the line. M. has चक्कलं only in place of the line. १० My. and P. drop it. ११ My. and P. omit it. १२ P. and My. omit अस्यामयं स्यात्. १३ °भाषणे T. १४ P. and My. omit the line. १५ राअ° M. १६ कोकिले T. १७ असिन्नयं स्यात् T.

त्यते । कांअपिउला । **मुहलं मुखे** ॥ ९३ ॥ मुहलं । **गत्तडी गायिकायाम्** ॥ ९४ ॥ अस्यामयं स्यात् । गत्तडी । **दुह्वोलना गवि** ॥ ९५ ॥ गव्ययं निपात्यते । दुह्वोलना । **माभाय्यभये** ॥ ९६ ॥ अभये अयं स्यात् । माभाइ । **तोमरिकः शस्त्रमार्जने** ॥ ९७ ॥ अस्मिन्नयं स्यात् । तोमरिओ । **वहुहाडिणी वध्वा उपरि परिणीतायाम्** ॥ ९८ ॥ अस्यामयं स्यात् । वहुहाडिणी । **रूअरूइआ उत्कलिकायाम्** ॥ ९९ ॥ अस्यामयं स्यात् । रूअरूइआ । **पुप्फीपिउसिआपिउच्चाः पितृष्वसरि** ॥ १०० ॥ अस्यामेते स्युः । पुप्फी । पिउसिआ । पिउच्चा । **आसन्नप्रसवायामणुसूआ** ॥ १०१॥ अस्यामयं स्यात् । अणुसूआ । **भागिनेये भच्चो** ॥ १०२ ॥ अस्मिन्नयं स्यात् । भच्चो । **ओहल्ल्यपसृतौ** ॥ १०३ ॥ अपसृतावयं स्यात् । ओहल्ली । **मम्मक्कमडप्परौ गर्वे** ॥ १०४ ॥ अस्मिन्नेतौ स्याताम् । ममक्को । मडप्परो ।

इति वरदत्तादयः ॥

---

**गोणाद्याः** ॥ १ । ३ । १०५ ॥

गोणादयः शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमविकारा बहुलं निपात्यन्ते ।

**गवि गोणा** ॥ १ ॥ गव्ययं स्यात् । गोणा । **तल्लतल्लडतलानि तल्पे** ॥ २ ॥ अस्मिन्नेते स्युः । तल्लं । तल्लडं । तलं । **धिरत्थु धिगस्त्वित्यर्थे** ॥ ३ ॥ अस्मिन्नयं स्यात् । **गोलागोदे गोदावर्याम्** ॥ ४ ॥ अस्यामेतौ स्याताम् । गोला । गोदा । गोला संस्कृतेपीति

---

१ राअ° M. २ My. and P. omit it. ३ P. and My. omit it. ४ स्यात् My., P. ५ Omitted in My., P.; T. has माभाई. ६ My. and P. omit अस्मिन्नयं स्यात्. ७ भच्चो भागिनेये T. ८ M. omits अस्मिन्—स्यात्. ९ My. and P. omit the line.

केचित् । **ओसाअण महीशाने** ॥ ५ ॥ अस्मिन्नयं स्यात् । आपोशन इति केचित् । **वणई वनराजौ** ॥ ६ ॥ अस्यामयं स्यात् । वणई । **पंगुरणं प्रावरणे** ॥ ७ ॥ **ओसिरणगोसौ व्युत्सर्जनप्रत्यूषयोः** ॥ ८ ॥ अनयोरेतौ क्रमाद् भवतः । **थोवथेवथोका स्तोके** ॥ ९ ॥ **आअविरुऔ अब्विरुद्धयोः** ॥ १० ॥ **पत्थेवाअवेलम्बौ पाथेय-विडम्बनयोः** ॥ ११ ॥ अनयोरेतौ क्रमात् स्तः । पत्थेवाओ । वेलम्बो । **बालबुद्बुदकरीरेषु बाअबुलुबुलकरिल्लाः** ॥ १२ ॥ एष्वेते क्रमात् स्युः । बाओ । बुलुबुलो । करिल्लो । **ऊआदोग्गधणिआ यूकयुग्मधन्यासु** ॥ १३ ॥ एष्वेते क्रमात् स्युः । ऊआ । दोग्गं । धणिआ । **उद्वहने णिव्वहणं** ॥ १४ ॥ णिव्वहइ । उद्वहतीत्यर्थः । **छि छि धिग्धिगित्यर्थे** ॥ १५ ॥ धिग्धिगित्यर्थे छिछि इति स्यात् । **चूतावडी** ॥ १६ ॥ अस्यामयं स्यात् । **ग्रहिल्लो ग्रहले** ॥ १७ ॥ अस्मिन्नयं स्यात् । **गोसमूहे गोणिक्को** ॥ १८ ॥ गोसमूहे गोणिक्को इति स्यात् । **अयुजरेवई अचिरयुवत्याम्** ॥ १९ ॥ अस्यामयं स्यात् अयुजरेवई । **आणरहू नववध्वाम्** ॥ २१ ॥ अस्यामयं स्यात् । आणरहू । **असुरे अमओ** ॥ २२ ॥ असुरे अयं स्यात् । अमओ । **पण्णवण्णा पञ्चपञ्चाशति** ॥ २३ ॥ अस्मिन्नयं स्यात् । पण्णवण्णा । **तेवण्णा त्रिपञ्चाशति** ॥ २४ ॥ **पण्णा पञ्चाशति** ॥ २५ ॥ **गामहणघुसिमे ग्रामस्थानघसृणयोः** ॥ २६ ॥ अनयोरेतौ क्रमात् स्तः । गामहणं । घुसिमं । **छटायां छट्टा** ॥ २७ ॥ **पाउरणबइल्लौ प्रावरणबलीवर्दयोः** ॥ २८ ॥ अनयोरेतौ क्रमात् स्तः । पाउरणं । बइल्लो । **हिज्जा ह्यस्थाने** ॥ २९ ॥ ह्य इत्यर्थे हिज्जेति निपात्यते ।

---

१ प्रत्यूषव्युत्सर्जनयोः T. २ स्तः T. ३ एषु क्रमादेते T. ४ My. and P. omit the line. ५ My. and P. omit the line. ६ Sûtra 20 is not found. It is given in the Appendix to the P. as घुग्गुळू अभिसारिकायाम् । ७ My. and P. omit the line. ८ P. and My. omit the line.

हिज्जा । त्रिचत्वारिंशति तेआलिसा ॥ ३० ॥ अस्मिन्नयं स्यात् । तेआलिसा । असंघडोसिण्यावास्थाज्योत्स्नयोः ॥ ३१ ॥ अनयोरेतौ क्रमात् स्तः । असंघो । डोसिणी । लक्कुडो लगुडे ॥ ३२ ॥ छेणो स्तेने ॥ ३३ ॥ कक्खडकक्खलौ कर्कशे ॥ ३४ ॥ अलाबूकलत्रयोः कलबूकत्ते ॥ ३५ ॥ अनयोरेतौ क्रमात् स्तः । कलबू । कत्तं । निलये णळिअणिहेळणे ॥ ३६ ॥ अस्मिन्नेतौ स्याताम् । णळिअं । णिहेळणं । णिक्कडणिरासौ निश्चयनृशंसयोः ॥ ३७ ॥ अनयोरेतौ क्रमात् स्तः । णिक्कडो । णिरासो । विहुंडुअ-णिं[1]प्फंसौ विधुन्तुदनिस्त्रिंशयोः ॥ ३८ ॥ अनयोरेतौ क्रमात् स्तः । विहुंडुओ । णिं[2]प्फंसो । बहिअकोलीरे मथितकुरुविन्दयोः ॥ ३९ ॥ अनयोरेतौ क्रमात् स्तैः[3] । वहिओ । कोळीरं । खेड्डं खेले ॥ ४० ॥ विउसग्गव्युडौ व्युत्सर्गविटयोः ॥ ४१ ॥ [4]अनयोः क्रमादेतौ स्तः । विउसग्गो । व्युडो । संघअणघाअणौ संहननगायनयोः ॥ ४२ ॥ अनयोरेतौ क्रमात् स्याताम् । संघअणं । घाअणो । मत्कुणककुदज-म्बालेषु डेंकुणकउडसेवालाः ॥ ४३ ॥ एतेष्वेते क्रमात् स्युः । डेंकुणो । कउडं । सेवाळं । अथक्कखुड्डअवड्डुअरा अकाण्डक्षुल्लक-बृहत्तरेषु ॥४४॥ एष्वेते क्रमात् स्युः । अथक्कं । खुड्डओ । वड्डुअरो । आनने आणुअं ॥ ४५ ॥ संगोल्लसामरीसिप्पितलाराः संघातशा-ल्मलीसूचीतलवरेषु ॥ ४६ ॥ एषु क्रमादेते स्युः । संगोल्लं । सामरी । सिप्पी । तलारो । अव्वा अम्बायाम् ॥ ४७ ॥ [5]अस्यामयं स्यात् । अव्वा । पम्मिहीमोरजच्छन्दाः पाणिभीमारस्वच्छन्देषु ॥ ४८ ॥ एतेष्वेते क्रमात् स्युः । पम्मी । हीमोरं । जच्छंदो । दिनमुखकुड्डुक शीर्षत्रसंस्तरेष्वणुदिवकुड्डसीसक्कसत्थराः ॥ ४९ ॥ एषु चत्वारः

---

1 °णिंफंसौ My. 2 णिंफंसो My. 3 स्याताम् T. 4 My. and P. drop अनयोः—स्तः. 5 P. and My. omit the line.

क्रमादेते स्युः ॥ अणुदिवं । कुड्डं । सीसक्कं । सत्थरो । **वित्थिरवीविकडप्पदूसळा विस्तारवीचिकलापदुर्भगेषु ॥ ५० ॥** एष्वेते क्रमात् स्युः । वित्थिरं । वीवी । कडप्पो । दूसळो । **छिल्लडंभिअडेड्डुराश्छिद्रदाम्भिकदर्दुरेषु ॥ ५१ ॥** एतेष्वेते क्रमात् स्युः । छिल्लं । डंभिओ । डेड्डुरो । **गण्डस्थले गल्लो ॥ ५२ ॥ वीली वीथ्याम् ॥ ५३ ॥ पाडिपिद्धिपडिसिद्धी प्रतिस्पर्धायाम् ॥५४॥** एतावस्यां स्याताम् । **वंजरंमजरौ मार्जारे ॥ ५५ ॥** अस्मिन्नेतौ स्याताम् । वंजरो । मंजरो । **गृध्रे गहरो ॥ ५६ ॥** अस्मिन्नयं स्यात् । गहरो । **उअअजमावृजौ ॥ ५७ ॥** ऋजावेतौ स्याताम् । उओ । अजमो । **अरणितणेसिसाळक्किआः सरणितृणराशिशारिकासु ॥ ५८ ॥** एष्वेते क्रमाद् भवन्ति । अरणी । तणेसी । साळक्किआ । **दुःखचतुष्पथकराळेषु दुग्गचउक्ककलेराः ॥ ५९ ॥** एषु त्रयः क्रमाद् भवन्ति । दुग्गं । चउक्कं । कलेरं ।

इति गोणाद्याः ।

---

**गहिआद्याः ॥ १ । ४ । १२१ ॥**

गहिआदयो निर्वचनगोचरा निपात्यन्ते ।

**ग्राह्यायां गहिआ ॥ १ ॥** अस्यामयं स्यात् । **णन्दिणीवडिणायौ धेनुघर्घरकण्ठयोः ॥ २ ॥ वइरोडाविणअवइच्छिण्णाणडाजडछिच्छअच्छिण्णाळा जारे ॥ ३ ॥** एते सप्त जारे निपात्यन्ते । वइरोडो । अविणअवई । च्छिण्णो । अणडो । अजडो । छिच्छओ । च्छिण्णाळो । **दूत्यामत्तिहरीसंचारीमदोळीपेसणआळीमराळीसहउत्थिआः ॥४॥** दूत्यामेते निपात्यन्ते । **पडिसोत्तपडिक्खरौ प्रतिकूले ॥ ५ ॥** अस्मिन्नेतौ स्याताम् । **जोअदोसारअणसमुद्धणवणीअदोसणिजन्ता-**

---

१ My. and P. omit the line. २ निपात्याः T.

श्चन्द्रे ॥ ६ ॥ [1]एते चत्वारश्चन्द्रे निपात्यन्ते । जोओ । दोसारअणो । समुद्धणवणीअं । दोसणिजन्तो । किमिघरवसणं कौशेये ॥ ७ ॥ कौशेयेयं निर्पात्यते । मुहरोमराइविसारौ भ्रूसैन्ययोः ॥ ८ ॥ अनयोरेतौ क्रमात् स्तः । मुहरोमराई । विसारो । चिरिचिरिआचिलिचिलिआ धारायाम् ॥ ९ ॥ समुद्धहरमम्बुगृहे ॥ १० ॥ तंबुकुसुमं कुरवककुरण्टकयोः ॥ ११ ॥ फणिनि पाअपअलाऔ ॥ १२ ॥ असिन्नेतौ निपात्यौ । पाओ । पअलाओ । अहिअलो क्रोधे ॥ १३ ॥ अयं निपात्यः । [3]स्तने सिहिणं ॥ १४ ॥ [4]असिन्नयं स्यात् । [5]अस्थिरे थिरण्णेसो ॥ १५ ॥ [6]अस्थिरे थिरण्णेसो निपात्यः । जोइक्खसूरंगौ दीपे ॥ १६ ॥ दीपे एतौ स्तः । जोइक्खो । सूरंगो । थेवो बिन्दौ ॥ १७ ॥ पासावअकोप्पौ गवाक्षापराधयोः ॥ १८ ॥ अनयोरेतौ क्रमाद् भवतः । उद्धते उम्महउद्धणपहद्वाः ॥ १९ ॥ जणउत्तजण्णहरौ ग्रामप्रधाननरराक्षसयोः ॥ २० ॥ एतयोरेतौ स्तः । जणउत्तो । जण्णहरो । आरनाळथेरोसणबम्हहरमम्बुजे ॥ २१ ॥ अम्बुजे त्रय एते निपात्यन्ते । आरनाळं । थेरोसणं । बम्हहरं । कंदोट्टं कलिमं चोत्पले ॥ २२ ॥ एतावुत्पले [7]प्रयोज्यौ । रअणिद्धअं चंदोज्जं कुमुदे ॥ २३ ॥ एतौ कुमुदे निपात्यौ । रअणिद्धअं । चंदोज्जं । धूमद्धअमहिसी कृत्तिकासु ॥ २४ ॥ अवहोओ विरहे ॥ २५ ॥ लंवावेल्लीवेल्लरिआ वल्लरीकेशयोः ॥ २६ ॥ अनयोरेते स्युः । घरअंदं मुकुरे ॥ २७ ॥ असिन्नयं स्यात् । आआसतअं हर्म्यपृष्ठे ॥ २८ ॥ असिन्नयम् । सुरद्धओ दिवसे ॥ २९ ॥ दि[9]वसेयं स्यात् । सुरद्धओ । प्रथमरजस्वलारक्तवस्त्रे आणंदवसो ॥ ३० ॥ असिन्नयं स्यात् । निमीलनलाक्षारक्तपृष्ठेष्वच्छिवडणवल्लविअणीसंकाः ॥ ३१ ॥ एष्वेते क्रमा-

---

१ चन्द्रे एते चत्वारः स्युः T. २ निपात्यः T. ३ सिहिणं स्तने T. ४ स्तने सिहिणमिति स्यात् T. ५ थिरण्णेसो अस्थिरे T. ६ My. and P. drop the line. ७ निपात्यौ T. ८ निपात्यौ T. ९ दिवसे सुरद्धओ निपात्यः T.

न्निपात्याः । अच्छिवडणं । वल्लविअं । णीसंको । **एलविलो धनिवृषयोः** ॥ ३२ ॥ अनयोरयं निपात्यते । एलविलो । **सुहरओ धारिकागृहचटकयोः** ॥ ३३ ॥ अनयोरयं निपात्यते । सुहरओ । **णिम्मीसुअहट्टमहट्टौ निश्मश्रुकयुवस्वस्थयोः** ॥ ३४ ॥ अनयोरेतौ क्रमात् स्याताम् । णिम्मीसुओ । हट्टमहट्टो । **णिहुअजहणरोहौ सुरतोर्वोः** ॥ ३५ ॥ सुरते ऊरौ चैतौ क्रमात् स्याताम् । णिहुअं । जहणरोहो । **अच्छुद्धसिरी मनोरथाधिकफलप्राप्तौ** ॥ ३६ ॥ फलप्राप्तावयं निपात्यते । अच्छुद्धसिरी । अब्बुद्धसिरीति केचित् । **पल्लोट्टजीहाउज्झहरौ रहस्यभेदिनि** ॥ ३७ ॥ **पिशाचे परेओ** ॥ ३८ ॥ अस्मिन्नयं प्रयोज्यः । **[1]चोरधूर्तयोर्बहुजाणो** ॥ ३९ ॥ [2]अयं चोरे धूर्ते च निपात्यते । जारधूर्तयोरिति केचित् । वहुजाणो । **जोईउज्झल्लौ विद्युत्प्रबलयोः** ॥ ४० ॥ अनयोरेतौ क्रमात् स्तः । जोई । उज्झलो । **भिंगं नीलस्वक्कृतयोः** ॥ ४१ ॥ नीले स्वक्कृते चायं स्यात् । **परिधाने णिअद्धणं** ॥ ४२ ॥ **जइणोसुअं चल्लणकं च जघनांशुके** ॥ ४३ ॥ अस्मिन्नेतौ स्याताम् । जहणोसुअं । चल्लणकं । **पाउरणं कवचे** ॥ ४४ ॥ कवचेयं प्रयोज्यः । पाउरणं । **[3]कम्पापचारयोरोअल्लो** ॥ ४५ ॥ [4]अनयोरयं स्यात् । ओअल्लो । **कराघाते चपेटा** ॥ ४६ ॥ अस्मिन्नयं स्यात् । **रइलक्खगोसण्णौ जघनमूर्खयोः** ॥ ४७ ॥ अनयोरेतौ क्रमात् स्याताम् । रइलक्खं । गोसण्णो । **वावडपुरिल्लौ कुडुंबिदैत्ययोः** ॥ ४८ ॥ अनयोरेतौ क्रमात् स्तः । वावडो । पुरिल्लो । **परभत्तचच्चिक्कौ भीरुस्थापकयोः** ॥ ४९ ॥ अनयोरेतौ क्रमात् स्तः । परभत्तो । चच्चिक्को । **काळभट्टिअइद्धग्गिधूमास्तमिस्रविष्णुतुहिनेषु** ॥ ५० ॥ एषु क्रमात् त्रयो निपात्याः । काळं । भट्टिओ । इद्धग्गिधूमो । **पत्थरओवाअऔ पादताडनापातपयोः**

---

१ बहुजाणो चोरधूर्तयोः T. २ अनयोर्बहुजाणो निपात्यः T. ३ ओअल्लो कम्पापच्चारयोः T. ४ कम्पे अपचारे च ओअल्लो इति स्यात् । T.

॥ ५१ ॥ अनयोरेतौ क्रमात् स्तः । पत्थरं । ओवाअओ । **पिउच्चा माउआ च सख्याम्** ॥ ५२ ॥ सख्यामेतौ निपात्येते । पिउच्चा । माउआ । **पोरत्थदोसौ मत्सरिकोपयोः** ॥ ५३ ॥ अनयोरेतौ क्रमात् स्तः । पोरत्थो । दोसो । **चच्चापम्हलौ तलाहतिकेसरयोः** ॥ ५४ ॥ एतयोरेतौ निपात्येते । चच्चा । पम्हलो । **खंधलट्ठि-खंधमसौ स्कन्धयष्टौ** ॥ ५५ ॥ अस्यामेतौ स्याताम् । खंधलट्ठी । खंधमसो । **तंबकिमिअग्गिआयाविन्द्रगोपे** ॥ ५६ ॥ अस्मिन्नेतौ स्याताम् । तंबकिमी । अग्गिआयो । **अनर्थे विहडणो** ॥ ५७ ॥ **जोअणजोअडौ खद्योते** ॥ ५८ ॥ **जोइअदरवल्लहौ खद्योत-कातरयोः** ॥ ५९ ॥ क्रमादनयोरेतौ स्याताम् । जोइओ । दरवल्लहो । **भोइअपंडरंगौ महेशग्रामेशयोः** ॥ ६० ॥ अनयोरेतौ क्रमात् स्तः ॥ **संकरसग्गहौ रथ्यामुक्तयोः** ॥ ६१ ॥ अनयोरेतौ क्रमात् स्याताम् । संकरो । सग्गहो । **अर्थदरे पअरो** ॥ ६२ ॥ **सुरायां मइमोहिणी** ॥ ६३ ॥ **दुर्दुरे धारावासो** ॥ ६४ ॥ **आस्यकलहयोः कमलं** ॥ ६५ ॥ अनयोरयं स्यात् । **वेणुसाअधुअराऔ भ्रमरे** ॥ ६६ ॥ अस्मिन्नेतौ स्याताम् । वेणुसाओ । धुअराओ । अस्मिन् प्रकरणे लिङ्ग-व्यत्ययः प्रयोगाधीनः ॥

इति गहिआद्याः ॥

---

**वा पुआइयाद्याः** ॥ १ । २ । ११० ॥

पुआई इत्यादयः शब्दाः स्वराद्यादेशविशेषिता वा निपात्यन्ते ।

**उन्मत्तपिशाचयोः[1] पुआई** ॥ १ ॥ अनयोरयं निपात्यते[2] । पुआई । **ऊणंदिअमानन्दिते** ॥ २ ॥ **तुंबुरौ दोबुरो** ॥ ३ ॥ **माहिवाओ माघवाते** ॥ ४ ॥ **सइकोडी शतकोटौ** ॥ ५ ॥ **माइंदो माकन्दे** ॥ ६ ॥ **ओंदुरो उन्दुरौ** ॥ ७ ॥ **आलिआ**

---

१ पिशाचोन्मत्तयोः T. २ स्यात् T.

आल्याम् ॥ ८ ॥ अस्मिन्नयं स्यात् । आळिआ । **तणसोल्लि तृणशून्ये** ॥ ९ ॥ अस्मिन्नयं स्यात् । तणसोल्ली । **अरिष्टदैत्यकाकेषु रिट्ठो** ॥ १० ॥ एष्वयं स्यात् । रिट्ठो । **द्रुते दुरिअं** ॥ ११ ॥ अस्मिन्नयं स्यात् । दुरिअं । **किरो किरौ** ॥ १२ ॥ **वामल्लूरो वामलूरौ** ॥ १३ ॥ **विसो वृषमूषिकयोः** ॥ १४ ॥ अनयोरयं स्यात् । विसो । **वंदं वृन्दे** ॥ १५ ॥ वृन्दे अयं स्यात् । वंदं । **हेरिंबो हेरम्बे** ॥ १६ ॥ हेरम्बे अयं स्यात् । हेरिंबो । **चिक्कं स्तोके** ॥१७॥ स्तोके अयं स्यात् । चिक्कं । **चरणायुधे चलणाओहो** ॥ १८ ॥ अस्मिन्नयं स्यात् । चलणाओहो । **उन्मत्तादुश्शीलयोर्वअणिआ** ॥ १९ ॥ अनयोरयं स्यात् । वअणिआ । उन्मत्ता दुःशीला च । **महालयपक्षे महळयपक्खो** ॥ २० ॥ अस्मिन्नयं स्यात् । महळयपक्खो । **चंचरीके चच्चरिओ** ॥ २१ ॥ अस्मिन्नयम् । चच्चरिओ । **मुसलं मांसले** ॥ २२ ॥ इत्यादि ॥

**अपुण्णगाः क्तेन** ॥ ३ । १ । १३२ ॥

अपुण्णादयः शब्दाः क्तप्रत्ययेन सह निपात्यन्ते ।

**आक्रान्ते अपुण्णं** ॥ १ ॥ अस्मिन्नयं स्यात् । अपुण्णं । **अम्मच्छपहट्ठावसंबद्धाचिरतरदृष्टयोः** ॥ २ ॥ असंबद्धे अचिरतरदृष्टे च एतौ क्रमात् स्याताम् । अम्मच्छं । पहट्ठो । **उल्लोक्कमरिअओसण्णात्रुटिते** ॥ ३ ॥ एते त्रयस्त्रुटिते निपात्यन्ते । उल्लोक्को । मरिओ । ओसण्णो । **गुञ्जलिअपेज्जलिऔ संघटिते** ॥ ४ ॥ अस्मिन्नेतौ निपात्येते । गुज्जलिओ । पेज्जलिओ । **पसल्लिअगळद्धअऊरुमल्लाः प्रेरिते** ॥ ५ ॥ [2]निपात्यन्ते । पसल्लिओ । गळद्धओ । ऊरुमल्लो । **अवकीर्णे उक्खणं** ॥ ६ ॥ अस्मिन्नयं स्यात् । उक्खणो । **ओसट्टविहिमिहिऔ विकसिते** ॥ ७ ॥ एतौ विकसिते स्तः । ओसट्टो । विहिमिहिओ । **अर्दिते उद्धरिअं** ॥ ८ ॥ **उपसर्पिते उल्लिओ** ॥ ९ ॥

---

१ P. omits it. २ एते चत्वारः प्रेरिते निपात्यन्ते T.

अस्मिन्नयं स्यात् । उल्लिओ । **छिन्नच्छिद्रतयोः कडद्दरिअं** ॥ १० ॥ अनयोरयं निपात्यते । कडद्दरिअं । **झडिअपरिहाइऔ श्रान्तपरिक्षीणयोः** ॥ ११ ॥ अनयोरेतौ क्रमात् स्याताम् । झडिओ । परिहाइओ । **उक्कज्जणिक्कज्जतडकडिअउच्चुगा अनवस्थिते** ॥ १२ ॥ [1]अस्मिन्नेते निपात्यन्ते । उक्कज्जो । णिक्कज्जो । तडकडिओ । उच्चुगो । **उद्धअपुव्वंगउ[2]च्चुरणउच्चल्ला[3]ः शान्तमुण्डितो[3]च्छिष्टोद्विग्नेषु** ॥ १३ ॥ एषु [4]चत्वारः क्रमान्निपात्यन्ते । उद्धओ । पुव्वंगो । उच्चुरणो । उच्च[5]ल्लो । **चकितक्रान्तयोरुव्विडं** ॥ १४ ॥ अनयोरयं निपात्यते । उव्विडं । **वहइअमाकासिअं च पर्याप्ते** ॥ १५ ॥ पर्याप्ते द्वयं निपात्यते । वहिइअं । आकासिअं । **उविद्धणाळीगोरडितहिद्धाखस्ते** ॥ १६ ॥ चत्वार [6]एते निपात्याः । उविद्धो । णाळी । गोरडितं । हिद्धो । **क्रुद्धे उव्विव्वो** ॥ १७ ॥ क्रुद्धे अयं स्यात् । उव्विव्वो । **सिट्ठविट्ठौ सुप्तोत्थिते** ॥ १८ ॥ सिट्ठो । विट्ठो । **ओमंसउव्विक्कावपसृतप्रलपितयोः** ॥ १९ ॥ अनयोरेतौ क्रमात् [7]स्तः । ओमंसो । उव्विक्को । **अवरोपितमुक्तयोर्विअंटूतं** ॥ २० ॥ अनयोरयं प्रयोज्यः । विअंटूतं । **ओहरणणिमिअओअघिआ आघ्राते** ॥२१॥ एते त्रय आघ्राते निपात्यन्ते । ओहरणं । णिमिअं । ओअघिअं । **ऊसविअमुद्भ्रान्ते** ॥ २२ ॥ उद्भ्रान्तेयं स्यात् । ऊसविअं । **रुद्धगलितयोराहिद्धो** ॥ २३ ॥ अनयोरयं स्यात् । आहिद्धो । **वातिते णिसुद्धो** ॥ २४ ॥ अस्मिन्नयं स्यात् । णिसुद्धो । **उम्मड्डणिच्चुड्डावुद्वृत्ते** ॥ २५ ॥ उद्वृत्ते एतौ स्याताम् । उम्मड्डो । णिच्चुड्डो । **उड्डिअजूसआवुत्क्षिप्ते** ॥ २६ ॥ एतौ उत्क्षिप्ते स्याताम् । उड्डिओ । जूसओ । **सुप्ते णिज्झलववणिहवल्लुकाः** ॥ २७ ॥ सुप्ते चत्वारो

---

१ अनवस्थिते एते चत्वारः स्यु. T. २ T. drops उच्चुरण. ३ T. drops उच्छिष्ट. ४ क्रमादेते स्यु. T. ५ T. has after this उच्चूरणमुच्छिष्टे । उच्छिष्टे उच्चूरणमिति स्यात् । ६ स्युः for एते निपात्याः T. ७ स्तः T.

निपात्यन्ते । णिज्जो । लववो । णिहवो । लुक्को । **रिअं लूने** ॥ २८ ॥ असिन्नयं स्यात् । रिअं । **विक्रीतनिम्नीकृतयोरुज्झणिअं** ॥ २९ ॥ **त्यक्ते जडं** ॥ ३० ॥ असिन्नयं स्यात् । जडं । **शुष्कनिम्नीकृतयोरुज्झिअं** ॥ ३१ ॥ अनयोरयं स्यात् । उज्झिअं । **घडं सृष्टीकृते** ॥ ३२ ॥ असिन्नयं स्यात् । घडं । **जलान्तःपतिते डिंडवो** ॥ ३३ ॥ जलावगाहिन्ययं प्रयोज्यः । डिंडवो । **आकीर्णे ओसडिओ** ॥ ३४ ॥ असिन्नयं स्यात् । ओसडिओ । **गुलिअं मथिते** ॥ ३५ ॥ गुलिअं । **उम्मरिअमुन्मूलिते** ॥ ३६ ॥ असिन्नयं स्यात् । उम्मरिअं । **उत्क्षिप्ते परिच्चिअउगाहिअउडाहिआः** ॥ ३७ ॥ उत्क्षिप्ते त्रयो निपात्याः । परिच्चिअं । उगाहिअं । उडाहिअं । **उदाहिअं च** ॥ ३८ ॥ अयमप्युत्क्षिप्ते निपात्यः । [1]उदाहिअं । **रसिते हेसिअदुंदुमिऔ** ॥ ३९ ॥ रसिते द्वयं निपात्यम् । हेसिअं । दुंदुमिअं । **परितोषिते चित्तवि[2]अओ** ॥ ४० ॥ असिन्नयं निपा[3]त्यते । चि[4]त्तविअओ । **परोट्टझपिअपल्लित्ताः पर्यस्ते** ॥ ४१ ॥ पर्यस्ते त्रयो निपात्याः ॥ परोट्टं । झपिअं । पल्लित्तं । **प्रमृष्टे अम्ह[5]त्तो** ॥ ४२ ॥ असिन्नयं [6]प्रयोज्यः । अम्ह[7]त्तो । **आघूर्णिते गअं** ॥ ४३ ॥ असिन्नयं स्यात् । गअं । **व्यासक्तप्रवृद्धयोरोवेवओ** ॥ ४४ ॥ अनयोरयं निपा[8]त्यः । ओवेवओ । **ओअम्मअओहामिआवभिभूते** ॥ ४५ ॥ एतावभिभूते निपात्यौ । ओअम्मओ । ओहामिओ । **अभिलषितप्रत्युद्गतवृद्धेषु रगिल्लवच्छुद्धळिअअक्कंताः** ॥ ४६ ॥ [9]एषु त्रयः क्रमान्निपात्याः । रगिल्लो । वच्छुद्धळिओ । अक्कंतो । **जअल्लकरमौ च्छन्नक्षीणयोः** ॥४७ ॥ [10]अनयोरेतौ क्रमात् स्तः । जअल्लो । करमो । **उपरतक्षीणयोः कथो** ॥ ४८ ॥ अनयोः कथो इति

---

१ P. and My. drop it. २ °विआओ M. ३ निपात्यः M. ४ °विआओ M. ५ अह्मत्तो My. ६ निपात्य. M. ७ अह्मत्तो My. ८ स्यात् M. ९ एतेष्वेते निपात्याः M. १० अनयोः क्रमादेतौ निपात्यौ M.

निपात्यः । कथो । **पेक्किअं वृषरटिते** ॥ ४९ ॥ [1]अस्मिन्नयं स्यात् । पेक्किअं ॥ **अंकिअमालिङ्गिते** ॥ ५० ॥ [2]अस्मिन्नयं स्यात् । अंकिअं । [3]**उल्लुओसिअचिमिणोसलिआ रोमाञ्चिते** ॥ ५१ ॥ अस्मिन् [4]एते त्रयः प्रयोज्याः । उल्लुओसिअं । चिमिणं । उसलिअं । **अस्संगिअमासक्ते** ॥ ५२ ॥ अयं स्यात् । अस्संगिअं । **मुकुलितमुक्तभ्रान्तपुलकितेषु आरोइअं** ॥ ५३ ॥ चतुर्षु [5]आरोइअमिति प्रयोज्यम् । आरोइअं । **अपहृतशरीरादिव्यथितयोरोच्छंदिअं** ॥ ५४ ॥ अनयोरयं स्यात् । ओच्छंदिअं । **छंडिअं छन्ने** ॥ ५५ ॥ अस्मिन्नयं स्यात् । छंडिअं । **ऊसुम्भिअमूसअं चोपधानीकृते** ॥ ५६ ॥ [6]एतावुपधानीकृते स्याताम् । ऊसुम्भिअं । ऊसअं । **आविअं प्रोते** ॥ ५७ ॥ प्रोते अयं स्यात् । आविअं । **दर्पिते अवहिट्ठो** ॥ ५८ ॥ अस्मिन्नयं स्यात् । अवहिट्ठो । **प्रवृद्धगृहागतयोरारोद्धो** ॥ ५९ ॥ अनयोरयं स्यात् ॥ आरोद्धो । **अन्विष्टे उडिअं घसणिअं च** ॥ ६० ॥ [7]अन्विष्टे एतौ स्याताम् । उडिअं । घसणिअं । **अशंके फणिते घुग्घुस्सुअं** ॥ ६१ ॥ [8]अस्मिन्नयं स्यात् । घुग्घुस्सुअं । **आरूढे उल्लूढोच्छूडौ** ॥ ६२ ॥ एतावारूढे प्रयोज्यौ । उल्लूढो । उच्छूढो । **आविलिओ कुपिते** ॥ ६३ ॥ कुपिते अयं स्यात् । आविलिओ । **कडिअं प्रीणिते** ॥ ६४ ॥ [9]अस्मिन्नयं स्यात् । कडिअं । **उप्पत्तो गलितविरक्तयोः** ॥ ६५ ॥ [10]अनयोरयं स्यात् । उप्पत्तो । **सन्नद्धे उओग्गिओ** ॥ ६६ ॥ [11]अस्मिन्नयं स्यात् । उओग्गिओ । **अपूरितस्खलितामूलोच्चलितमूढविघटितेषु गुम्मइओ** ॥ ६७ ॥ [12]एतेष्वयं

---

१ वृषरटिते पेक्किअमिति स्यात् M. २ आलिङ्गिते अयं निपात्य· M. ३ M. adds उक्ते अकिअ । अस्मिन्नयं स्यात् । अकिअ । before this. ४ त्रयो निपात्याः My, P ५ अयं प्रयोज्य· M. ६ उपधानीकृते एतौ M. ७ एतौ अन्विष्टे M. ८ My. and P. drop the line. ९ P. and My. drop the line. १० P. and My. drop the line. ११ My. and P. drop the line. १२ P. and My. omit it.

स्यात् । गुम्मइओ । **भग्ने पडिरिग्गअं** ॥ ६८ ॥ असिन्नयं स्यात् । पडिरिग्गअं । **प्रकटिते परिअड्डिअं** ॥ ६९ ॥ **परिच्छन्ने परिअट्टविअं** ॥ ७० ॥ [1]परिअट्टविअं । **ओप्पं मृष्टे** ॥ ७१ ॥ [2]ओप्पं । **कोज्जरिअमापूरिते** ॥ ७२ ॥ [3]कोज्जरिअं । **ओमल्लं घनीभूते** ॥ ७३ ॥ [4]ओमल्लं । **वेल्लइअं घडइअं च संकुचिते** ॥ ७४ ॥ [5]असिन्नयं स्यात् । वेल्लइअं । **झंदिअं प्रद्रुते** ॥ ७५ ॥ असिन्नयं स्यात् । [6]झंदिअं । **प्रयतपरिजागरितयोरणुज्झिअओ** ॥ ७६ ॥ अनयोरयं स्यात् । अणुज्झिअओ । **पज्जतरं दलिते** ॥ ७७ ॥ असिन्नयं स्यात् । [7]पंज्जतरं । **अवितृप्ते उलुहुलुअं** ॥ ७८ ॥ [8]असिन्निदं स्यात् । उलुहिलुअमिति केचित् । **वप्पिअमारोग्गरिअमुल्लअं च रक्ते** ॥ ७९ ॥ त्रय एते निपात्याः । वप्पिअं । आरोग्गरिअं । उल्लअं । **उघणमहिरोइअमहुमाअमप्पुण्णं च पूर्णे** ॥ ८० ॥ पूर्णे चत्वारो निपात्याः । उघणं । अहिरोइअं । अहुमाअं । अप्पुण्णं । **सन्मुखमागते पच्छाणिओ** ॥ ८१ ॥ असिन्नयं स्यात् । पच्छाणिओ । **अग्गुच्छं प्रमिते** ॥ ८२ ॥ प्रमिते अयं स्यात् । [9]अंग्गुच्छं । **पङ्काविअं समापिते** ॥ ८३ ॥ असिन्नयं स्यात् । [10]पंङ्काविअं । **अभिपीडिते वारड्डं** ॥ ८४ ॥ असिन्निदं निपात्यम् । [11]वारड्डं । **उद्दारिअं रणद्रुते** ॥ ८५ ॥ अत्रैतन्निपात्यम् । [12]उद्दारिअं । **उज्झमाणं पलायिते** ॥ ८६ ॥ अत्रेदं स्यात् । [13]उज्झमाणं । **अर्जिते विढ्ढितं** ॥ ८७ ॥ असिन्निदं स्यात् । विढ्ढितं । **च्छिक्कं स्पृष्टे**[14] ॥ ८८ ॥ [15]असिन्निदं निपात्यम् । [16]च्छिक्कं । **हते पणिल्लिअं** ॥ ८९ ॥ हते इदं

---

१ Omitted in P., My. २ Omitted in P., My. ३ Omitted in My., P. ४ Omitted in P., My. ५ P. and My. omit the line. ६ Omitted in My., P. ७ Omitted in My., P. ८ अवितृप्तेयं निपात्यः M. ९ Omitted in My., P. १० Omitted in P., My. ११ P. and My. omit it. १२ Omitted in P., My. १३ Omitted in P., My १४ स्पृष्टे इदं स्यात् P., My. १५ Omitted in My., P. १६ Omitted in P., My.

स्यात् । [1]पणिक्लिअं । **आविन्ने पिडओ** ॥ ९० ॥ अत्रायं स्यात् । [2]पिडओ । **साणिअणिक्खाविऔ शान्ते** ॥ ९१ ॥ अस्मिन्नेतौ स्याताम् । साणिओ । णिक्खाविओ । **पिष्टे आप्पणसोहिअवक्कसमराइआः** ॥ ९२ ॥ पिष्टे चत्वारो निपात्याः । आप्पणं । सोहिअं । वक्कं । समराइअं । **वड्डिमवडिसाअअवसण्णाः स्नुते** ॥ ९३ ॥ स्नुते त्रयो निपात्याः । वड्डिमं । वडिसाअं । अवसण्णं । स्नुतमित्यर्थः । **[3]वंडइअं पीडिते** ॥ ९४ ॥ अस्मिन्नयं स्यात् । [4]वंडइअं । **विरचितविप्रगृहीतयोरग्गहिओ** ॥ ९५ ॥ अनयोरयं स्यात् । अग्गहिओ । **अवधूते [5]गविअं** ॥ ९६ ॥ अस्मिन्निदं निपात्यम् । [6]गविअं । **निषिद्धे विडुच्छओ** ॥ ९७ ॥ अस्मिन्नयं निपात्यः । [7]विडुच्छओ । **निर्गते णग्गठो** ॥ ९८ ॥ अत्रायं निपात्यः । [8]णग्गठो । **वोढ्ढिकिपाडावत्यासक्तस्खलितयोः** ॥ ९९ ॥ अनयोरेतौ क्रमात् स्तः । वोड्डी । किपाडो । **पविरंजवलोड्डौ स्निग्धस्मृतयोः** ॥ १०० ॥ अनयोरेतौ क्रमात् [9]स्याताम् । पविरंजवो । लोड्डो । **उवडिअमुदूळिअमोणअमवनते** ॥ १०१ ॥ अवनते [11]त्रयो निपात्याः । उवडिअं । उदूळिअं । ओणअं । **उज्झळिअं प्रक्षिप्तविक्षिप्तयोः** ॥ १०२ ॥ अनयोरयं स्यात् । उज्झळिअं । **मत्ते अविहिओ** ॥ १०३ ॥ मत्ते अयं स्यात् । [12]अविहिओ । **परिक्खाइअओ परिक्षीणे** ॥ १०४ ॥ परिक्षीणे अयं स्यात् । परिक्खाइअओ । **क्षुते [13]चिंक्कं पिलुअं च** ॥१०५॥ अस्मिन्नेतौ स्याताम् । [14]चिंक्कं । पिलुअं । **पविग्घं विस्मृते** ॥ १०६ ॥ अस्मिन्नयं स्यात् । [15]पविग्घं । **उज्झसिअमवडाहिअमुक्कासमुत्कृष्टे** ॥ १०७ ॥ उत्कृष्टे त्रयो निपात्याः । उज्झसिअं । अवडाहिअं ।

---

१ Omitted in P., My. २ Omitted in My., P. ३ पंडइअ M. ४ पंडइअ M. ५ गव्विअ M. ६ गव्विअ M. ७ Omitted in My., P. ८ णग्घट्ठो My. ९ Omitted in P., My. १० भवत M. ११ त्रय एते स्युः M. १२ Omitted in My., P. १३ छिक्कं M. १४ छिक्कं M. १५ Omitted in P., My.

उक्कासं । हल्लपविअं त्वरिते ॥ १०८ ॥ त्वरिते अयं स्यात् । [1]हल्लपविअं । उद्धारिअमुत्खाते ॥ १०९ ॥ उत्खाते अयं स्यात् । उद्धारिअं । याते आरिट्ठो ॥ ११० ॥ असिन्नयं स्यात् । [2]आरिट्ठो । उल्लिक्कं दुश्चेष्टिते ॥ १११ ॥ असिन्नेतन्निपात्यम् । [3]उल्लिक्कं । उच्चदिअं मुषिते ॥ ११२ ॥ मुषिते इदं स्यात् । [4]उच्चदिअं । ऊगिअपट्ठिअमिआ अलंकृते ॥ ११३ ॥ अलंकृते त्रयो निपात्याः । ऊगिअं । पट्ठिअं । मिअं । उक्कअं प्रसृते ॥ ११४ ॥ प्रसृते अयं स्यात् । [5]उक्कअं । उच्छिरणमुच्छिष्टे ॥ ११५ ॥ ओसरिओ आकीर्णे अक्षिसंकोचात् संज्ञिते च ॥ ११६ ॥ गत्तल्हिक्कगावसत्तो गते ॥११७॥ एते चत्वारो निपात्याः । गत्तो । ल्हिक्को । गावो । सत्तो । ओसिअविच्छुरिअपडिहत्था अपूर्वे ॥ ११८॥ अपूर्वे त्रयो निपात्याः । ओसिअं । विच्छुरिअं । पडिहत्थो । णिउरं छिन्नजीर्णयोः ॥११९॥ अनयोरयं स्यात् । [6]णिउरं । अध्यासिते उच्चल्लोप्पल्लोय्यल्लांजडिओत्तत्ताः ॥ १२० ॥ अध्यासिते पञ्चैते निपात्याः । उच्चल्लो । उप्पल्लो । उय्यल्लो । अंजडिओ । उत्तत्तो । ओअल्लअमुक्कंदं च विप्रलब्धे ॥ १२१ ॥ [7]असिन्नेतौ निपात्यौ । ओअल्लअं । उक्कंदं । लिप्ते उडंबो ॥ १२२ ॥ असिन्नयं स्यात् । [8]उडंबो । छूहिअं पार्श्वपरावृत्ते ॥ १२३ ॥ असिन्नयं स्यात् । [9]छूहिअं । अपिट्टवलट्टं पुनरुक्ते ॥ १२४ ॥ असिन्नेतौ स्यातम् । अपिट्टं । वलट्टं । आस्तृते अण्णासअं ॥ १२५ ॥ असिन्नयं स्यात् । अण्णासअं । अनष्टे [10]अंपंडिअं ॥ १२६ ॥ असिन्नयं स्यात् । [11]अंपंडिअं । अणहवणअं भर्त्सिते ॥ १२७ ॥ [12]असिन्नयं निपात्यः । [13]अणहवणअं । उक्करिअमरि-

१ Omitted in My., P. २ Omitted in P., My. ३ Omitted in P., My. ४ Omitted in P., My. ५ Omitted in P, My. ६ Omitted in P, My. ७ विप्रलब्धे द्वयं स्यात् M. ८ Omitted in P, My. ९ Omitted in P., My. १० उव्वडिअ M. ११ उव्वंडिअ M. १२ भर्त्सिते M. १३ Omitted in My., P.

**अओघिअविवअइसआ विस्तीर्णे** ॥ १२८ ॥ विस्तीर्णे पञ्चैते निपात्यन्ते । उक्करिओ । मरिओ । ओघिओ । विवओ । इसओ । **रुद्धवामावगळवेण्णधुत्ता आक्रान्ते** ॥ १२९ ॥ आक्रान्ते पञ्चैते नि[1]पात्यन्ते । रुद्धो । वामो । अवगळो । वेण्णो । धुत्तो । **आरोपितखण्डितयोरुक्करिअंउरविअंउक्कंडिअंअण्णंकव्वरिअं च** ॥ १३० ॥ [2]एतयोः [3]पञ्चैतानि निपात्यन्ते । उक्करिअं इत्यादि । **चूर्णिते आडविओ** ॥ १३१ ॥ अस्मिन्नयं स्यात् । [4]आडविओ । **उल्लुअं धुहअं ओउल्लिअं उक्कोसिअं उच्चरिअं वणनत्तडिअं च पुरस्कृते** ॥ १३२ ॥ पुरस्कृते षडेते नि[5]पात्याः । **वलक्किअं उत्सङ्गिते** ॥ १३३ ॥ अस्मिन्नयं स्यात् । व[6]लक्किअं । **उय्यकिअं पुञ्जीकृते** ॥ १३४ ॥ [7]अत्रैतत् प्रयोज्यम् । [8]उय्यकिअं । **पिङ्गइअं प्रशान्ते** ॥ १३५ ॥ [9]अत्रैतन्निपात्यम् । पि[10]ङ्गइअं । **उल्लुहुंडिअं हेपिअं हक्किअं हेसमणं चोन्नते** ॥ १३६ ॥ उन्नते चत्वार [11]एते निपात्याः । उ[12]ल्लुहुंडिअं । हेपिअं । हक्किअं । हेसमणं । **निवासिते ज्झहुराविअं णिगमिअं च** ॥१३७॥ [13]अस्मिन्नेतौ स्याताम् । ज्झहुराविअं । णिगमिअं । **उच्छिल्लो अवजीर्णे** ॥ १३८ ॥ अस्मिन्नयं स्यात् । उच्छिल्लो । **गुम्मिओ मूलाच्छिन्ने** ॥ १३९ ॥ [14]अस्मिन्नयं स्यात् । गुम्मिओ । **जलधौते णिप्पणिओ** ॥ १४० ॥ [15]अस्मिन्नयं स्यात् । णिप्पणिओ । **आच्छादिते [16]वक्खलं** ॥ १४१ ॥ अत्रैतत् स्यात् । [17]वक्खलं । **रञ्जिते [18]तुत्तुरिअं** ॥ १४२ ॥ [19]अत्रैतत् स्यात् । [20]तुत्तुरिअं । **प्रोक्षिते रोक्कअं** ॥ १४३ ॥ [21]अस्मिन्नयं

---

१ निपात्या My २ अनयोरेते पञ्च स्युः T. ३ पञ्चैते प्रयोज्या My, P. ४ Omitted in My, P. ५ प्रयोज्या My., P. ६ Omitted in P., My. ७ पुञ्जीकृते इदं स्यात् My. ८ Omitted in P., My. ९ अत्रेदं My., P. १० Omitted in P, My. ११ My. and P. drop एते. १२ Omitted in My., P. १३ Omitted in P., My. १४ Omitted in P., My. १५ Omitted in My., P. १६ पक्खिअं M. १७ पक्खिअ M., १८ तुत्तिरिअ M. १९ रञ्जिते एतत् M. २० तुत्तिरिअ M. २१ अयमत्र स्यात् P., My.

स्यात् । [1]रोक्कअं । **पीतपतितपेटितेषु वरत्तो** ॥ १४४ ॥ एष्वयं स्यात् । [2]वेरत्तो । **वर्धितपरिनुत्तयोः सडिअग्गिअं** ॥ १४५ ॥ अनयोरयं स्यात । [3]सँडिअग्गिअं । **दारिते उच्चलो** ॥ १४६ ॥ अत्रेदं प्रयोज्यम् । [4]उँच्चलो । **वञ्चिते अवाडिओ** ॥ १४७ ॥ अत्रैतत् स्यात् । [5]अँवाडिओ । **ऊरिसंकिअनङ्गअपंसुला रुद्धे** ॥ १४८ ॥ रुद्धे त्रय एते निपात्याः । [6]ऊँरिसंकिओ । नङ्गओ । पंसुलो । **अपूर्णगूढस्खलितेषु [7]गँमिदो** ॥ १४९ ॥ त्रिष्वयं नि[8]पात्यः । [9]गंमिदो । **आरूढचूर्णितपीतोद्विग्नेषु संसाओ** ॥ १५० ॥ चतुर्ष्वयं निपात्यः । संसाओ । **दृष्टे उत्तुर्वो** ॥ १५१ ॥ दृष्टे अयं निपात्यः । उत्तुर्वो । इत्यादि । [10]कृष्टानुपसर्ग[11]घृष्ट[12]वाक्यविद्वस्वाचस्पतिविष्टरश्रवस्प्रचेतस्प्रोक्तादीनां क्विबादिप्रत्ययान्तानां चाग्निचित्सोमसुदित्यादीनां सुग्लौसुम्लै [13]इत्यादीनां च पूर्वैः कविभिरप्रयुक्तानां प्रतीतिवैषम्यकरः प्रयोगो न कर्तव्यः । शब्दान्तरैरेव [14]तदर्थोभिधेयः । यथा कृष्टः कृशः वाचस्पतिर्गुरुः विष्टरश्रवाः हरिरित्यादि । घृष्टशब्दस्य सोपसर्गस्य प्रयोग इष्यत एव । मंदरअडपरिघट्टं । मन्दरतटपरिघृष्टम् ॥

इति श्रीमदखिलविद्यापरिवारदक्षिणामूर्तिमहादेवप्रसादलब्धवि[15]द्यपूर्वोत्तरमीमासा[16]शब्दतर्कसाहित्यसार्वभौम[17]चरकूरियज्ञेश्वरभट्टोपाध्याय[18]तनय[19]कोण्डभट्टोपाध्यायशिष्येण सर्वाम्बिकागर्भ[20]शुक्तिमुक्तामणिना दक्षिणामूर्ति[21]महादेवकिङ्करेण सर्वविद्वत्कवि[22]मतेन लक्ष्मीधरेण विरचितायां षड्भाषाचन्द्रिकाया प्राकृतप्रक्रियाया सुबन्तविभाग. [23]संपूर्ण.[24] ॥

---

१ Omitted in P., My. २ Omitted in P, My. ३ Omitted in My., P. ४ Omitted in P., My. ५ Omitted in P., My. ६ P. and My. omit the instances. ७ गमिलो M. ८ स्यात् M. ९ गमिलो M., Omitted in My., P. १० घृष्टा °M. ११ मृष्ट M. १२ M. omits वाक्य. १३ M. drops इत्यादीना च. १४ तथाभिधेयाः M. १५ °विद्येन T. १६ T. has कर्तृ for शब्दतर्क. १७ T. has दव for चर. १८ °तनयेन T. १९ M. drops कोण्डभट्टोपाध्याय. २० M. drops शुक्ति. २१ M. drops महादेव २२ नुतेन T. २३ समाप्तः T. २४ T. adds श्रीमेधादक्षिणामूर्त्तये नमः ॥

श्रीहयग्रीवाय नमः ।

नमो ब्रह्मादिदेवानामज्ञानध्वान्तभानवे ।
[1]सर्वार्थबद्धदीक्षाय दक्षिणामूर्तये नमः ॥ १ ॥

अथ[2] तिङन्तप्रक्रिया निरूप्यते ।

**भू सत्तायाम् । भू इति स्थिते**

**होहुवहवा भुवेस्तु ॥ ३ । १ । १ ॥**

भवतेर्धातोर्हो हुव हव इति त्रय आदेशा[3] भवन्ति । अकार उच्चारणार्थः । हो इति स्थिते । अनुक्तमन्यन्यायेन लटस्तिबादौ सति

**लटस्तिप्साविजेच् ॥ २ । ४ । १ ॥**

लटः प्रथमपुरुषैकवचनयोस्तिप्सयोः प्रत्येकं इच् एच् इति भवतः । चकारौ 'हुरेचिति'[4] इति विशेषार्थौ[5] । अत्र लड्ग्रहणं लकारमात्रोपलक्षणम्[6] । तेन लटः लस्येत्यर्थः । अनुक्तमन्यन्यायेन शबादिप्राप्तौ

**न शपाम् ॥**

अत्र शबादीनां प्रयोगो न[7] भवति । इति शबादिप्रतिषेधः । होइ ॥

**अत एवैच् से ॥ २ । ४ । ७ ॥**

लटः [8]प्रथमपुरुषस्यैकत्वे विहितो य एच् मध्यमपुरुषस्यैकत्वे विहितो यः से तावकारान्तादेव भवतो नान्यस्मात् । इत्यदन्तविषयत्वात् हो इ इत्यत्र तौ न भवतः ॥ 'हलोक्' इत्यतः 'अक्' इत्यनुवर्तमाने

**त्वनतः ॥ २ । ४ । ६९ ॥**

अकारान्तवर्जितादजन्ताद्धातोरगागमो भवति तु[9] । होअइ । होअए । अत्रागमे कृते अदन्तत्वादेच् भवति ॥

---

१ चन्द्रचारुवराङ्गाय for सर्वार्थबद्धदीक्षाय P, My. २ T. gives this section after the treatment of शौरसेनी and other dialects. ३ आदेशाः स्युः T. ४ हुरचेति M. ५ विशेषणार्थौ T. ६ °मात्रोपलक्षणार्थम् T ७ नास्ति T. ८ °पुरुषैकत्वे My. ९ M. drops तु.

**लङ्लटोश्च जर्जारौ ॥ २ । ४ । ३८ ॥**

लङ्लटोर्वर्तमानभविष्यतोश्चकाराद्विध्यादिषु च सर्वत्र पुरुषेषु वचनेषु च विहितस्य प्रत्ययस्य स्थाने जजावित्येतौ रितौ वा[1] भवतः । रित्वाद् द्वित्वम् । इति लट्प्रथमपुरुषस्यैकस्थाने ऐतौ[2] भवतः । होज्ज । होज्जा । पक्षे । होइ । सर्वलकारेषु जर्जाराविति केचित् ॥

'लङ्लटोश्च जर्जारौ' इत्यधिकृत्य

**मध्ये चाजन्तात् ॥ २ । ४ । ३९ ॥**

अजन्ताद्धातोः प्रकृतिप्रत्यययोर्मध्ये चकारात् प्रत्ययानां स्थाने[3] जर्जरौ तुँ[4] भवतो लङ्लटोर्विध्यादिषु च । इति होइकारयोर्मध्ये भवतः[5] । होज्जइ । होज्जाइ । इत्येकवचनम् । तिङन्तेपि द्विवचनस्य बहुवचनमेव ॥

**झिझौ न्तिन्तेइरे ॥ २ । ४ । ४ ॥**

लटः प्रथमपुरुषबहुत्वे वर्तमानयोः झिझयोः न्ति न्ते इरे इति त्रय आदेशा[6] भवन्ति । होन्ति । होन्ते । होइरे । अत्रैव 'होहुवहवा भुवेस्तु' इत्यतः 'भुवेः' इत्यधिकृत्य

**हुरचिति ॥ ३ । १ । ५ ॥**

चिद्वर्जिते प्रत्यये परे भुवेर्हुरित्यादेशो भवति । हुन्ति । हुन्ते । हुइरे । इत्याद्यपि बोद्धव्यम् । बहुलाधिकारात् क्वचिदेकत्वेपि इरे दृश्यते । सूसइरे ताण तारिसो कण्ठो । शुष्यति तासां तादृशः कण्ठः । 'रुषगेचो दिः' इत्युकारस्य दीर्घः । 'त्वनतः' इत्यगागमः । होअन्ति । होअन्ते । होअइरे । 'मध्ये चाजन्तात्' इति जर्जारौ । होज्जन्ति । होज्जन्ते । होज्जइरे । अत्र पूर्वोदाहरणद्वये 'संयोगे' इति ह्रस्वे सति जारोपीदमेवोदाहरणम् । होज्जाइरे इत्यत्र निमित्ताभावान्न 'संयोगे' इति ह्रस्वः । होज्ज । होज्जा ॥ मध्यमपुरुषैकवचने

---

१ T. omits वा २ अपि तौ M., T. ३ च स्थाने M. ४ इत्येतौ स्तः T. ५ तौ भवतः M.; अपि स्त. T. ६ आदेशाः स्युः T.

**सिप्थासोःसेसि ॥ २ । ४ । २ ॥**

'लटः' इत्यनुवर्तते । लटः परस्मैपदात्मनेपदमध्यमपुरुषैकत्वे वर्तमानयोः सिप् थास् इत्येतयोः प्रत्येकं से सि इत्येतौ भवतः । होसि । नात्र से । अनदन्तत्वात् । 'त्वनतः' इत्यगागमे कृते अदन्तत्वात् से सि । होअसि । होअसे । 'मध्ये चाजन्तात्' इति जर्जारौ । होज्जसि । होज्जासि । 'लङ्लटोः—' इति जर्जारो । होज्ज । होज्जा ॥ मध्यमपुरुषबहुवचने

**थध्वमित्थाहचौ ॥ २ । ४ । ५ ॥**

लटो मध्यमपुरुषबहुवचनयोः थध्वं इत्येतयोः प्रत्येकं इत्थाहच् इत्यादेशौ भवतः[1] । होइत्था । होह । होअइत्था । होअह । होज्जइत्था । होज्जह । होज्जाइत्था । होज्जाह । होज्ज । होज्जा । बहुलाधिकारात् क्वचित् प्रथमपुरुषैकवचनेपि इत्था । जन्ते रोइत्था । यत्ते रोचते ॥ उत्तमपुरुषैकवचने[2]

**मिर्मिबिटौ ॥ २ । ४ । ३ ॥**

लटः परस्मैपदात्मनेपदोत्तमपुरुषैकवचनयोः मिप् इट् इत्येतयोः प्रत्येकं मि इति भवति[3] । होमि । बहुलाधिकारात् मिबिटोरादेशस्य मेरिकारलोपश्च । बहु वण्णिउ ण सक्कं । बहु वर्णितुं न शक्नोमि । 'त्वनतः' इत्यगागमे 'अदेल्लुक्यात्खोरतः' इत्यतः 'आत्' 'अतः' इति चानुवर्तते ।

**तुमौ ॥ २ । ४ । १६ ॥**

अदन्ताद्धातोरुत्तमपुरुषैकवचनादेशो मौ परे आत्वं तु भवति । इति धात्ववयवस्यागागमस्य विकल्पेनात्वे होआमि[4] । होअमि । मौपरे इत्वमिति केचित् । होइमि ॥

**वा लङ्लोट्छतृषु ॥ २ । ४ । २० ॥**

---

१ स्तः T. २ उत्तमैकवचने P., My. ३ स्यात् T. ४ होअमि । होआमि. T.

